

॥ श्रीसीतारामचन्द्राभ्यां नमः ॥
॥ श्रीमते रामानन्दाचार्याय नमः ॥
॥ श्रीमद्गोस्वामितुलसीदासाय नमः ॥
॥ श्रीमते अग्रदेवाचार्याय नमः ॥

# ॥ श्रीजानकीमुद्रिकाष्टकम् ॥

*This text has been prepared by Vishal Pandey (B.Tech IIT Kanpur) with the blessings of*
***Chitrakūṭa Tulasīpīṭhādhiśvara Jagadguru Rāmānandāchārya Śrī Svāmī Rāmabhadrāchārya***

**सीतानाथ समारम्भां रामानन्दार्य मध्यमाम् ।**
**अस्मदाचार्य पर्यन्तां वन्दे श्री गुरु परम्पराम् ॥**

# अथ श्रीजानकीमुद्रिकाष्टकम्

सीताकरसरोजस्य दले किल विराजिताम्।
स्वङ्गुली भूषणं तस्मान्मुद्रिकायां नमाम्यहम्॥

श्रीरामो योगिभिर्ध्येयः सोऽपि ध्यायति यां सदा।
सीतानामाङ्क संयुक्तं मुद्रिकां प्रणमाम्यहम्॥

तेजोमण्डल सन्दर्भे भक्तानां जनकस्य मस्तकोपरि।
वर्तिनी सर्वलोकेष्वभयदां मुद्रिकां स्तुमः॥

आदर्श वर्तुलाकारे कपोले श्यामसुन्दरे।
स्फुरन्तीं राजपुत्रस्य दक्षे सीतोर्मिकां स्तुमः॥

यस्या अंशोद्भवा माया जगदुत्पादितुं क्षमा।
सीताङ्गुल्योर्मिका सा मे श्रेयोदिशतु सर्वदा॥

अङ्गुष्ठस्यापि तर्जन्यां मध्यमा या मनोहराम्।
रामस्य राजपुत्रस्य जानक्या मुद्रिकां स्तुमः॥

कनिष्ठाया उर्मिकां चानामिकायास्तथैव च।
विभ्रन्तीं मण्डल नौमि जानक्याः करयोर्द्वयोः॥

चन्द्रिका मुद्रिका बाण धनुषां च स्तवादिकम्।
उमामहेश्वरोक्तं च स्त्रियो वा पुरुषा अपि॥

पठन्ति नियमान्नित्यं सायं प्रातस्तु भक्तितः।
सायुज्यं ते प्राप्नुवन्ति सीताया राघवस्य च॥

**॥ इति श्रीशंकरकृते श्रीअमररामायणे श्रीसीताराम-रत्नमञ्जूषायां पार्वती संस्कारो नाम प्रथमस्सर्गः॥**